याज्ञवीभिरेव वा सर्वेभ्यो जुहुयादेवं वाग्यतो भुक्त्वा चमृतापिधानमसीत्यपिधानं प्राश्य शोधितमुखपादपाणिशिराश्चमिदेवं भुञ्जानोऽग्निष्टोमफलमश्नुते बलपुष्टिमान् भवति सर्वमायुरेति ॥ ११ ॥

अथास्तमिते सायंसन्ध्यामुक्तवदुपास्य होमदैवदेवब्रह्मयज्ञातिथ्यार्चनानि कृत्वा यदि दिवोदितकर्माण्यकृतानि यावत्प्रहरं यामिन्यास्तावत् क्रमेण सर्वाणि सौरं वर्जयित्वा कुर्य्यादारुणोयेनैवार्घ्यं दद्यादिति विशेषोऽष्टमीं चतुर्दशीं भानुवारं यावदिनं तत्पूर्वदिनञ्च वर्जयित्वायशिष्टरात्रिषु नियमेनामात्यैः परिवृतो लघु भोजनं कृत्वा पत्न्या सह ताम्बूलादिसेवनं कृत्वा सन्ध्यायां शून्यालये श्मशाने चैकवृक्षे चतुष्पथे शिवमातृकायक्षनागस्कन्दभैरवायुधदेवगृहेषु धान्यगोदेवविप्राग्निरूपाणामुपरि वा शुचौ देशे शुचिरार्द्रवस्त्रपादो न नग्नः शयनं कुर्यात् रात्रीति व्यय्यदायतीति सूक्तं जपित्वा प्राक्शिरो दक्षिणतः शिरो वेष्टयित्वा देवतां नत्वा स्मरणं च कृत्वा वैणवदण्डमुदकपात्रं च शयनसमीपे निधाय प्रक्षालितपादः शयनं कुर्यात् प्रदोषपरयामौ निद्रयातिक्रम्याथ प्रभाते इष्टदेवतां मनसा नत्वा तदहःकृत्यं स्मृत्वा धर्मशास्त्रोक्तविधिना मूत्रपुरीषोत्सर्गादि कुर्य्यात् ॥ १२ ॥

अथ श्राद्धानि तान्यष्टौ पूर्वेद्युः पार्वणं चाष्टम्यन्वष्टकं मासि मासि काम्यं चाभ्युदयिकमेकोद्दिष्टं पार्वणं चेति पर्वामावास्या तत्र भवं पार्वणं तदाहिताग्निः पिण्डपितृयज्ञं कृत्वा करोत्यनाहिताग्निस्तु तदितरेण व्यतिषज्यते यथादौ पिण्डपितृयज्ञो यावदिध्माधानादय पार्वणं श्राद्धयपञ्चौचाश्याल्हादनान्तं पुनः पितृयज्ञ चामिचरणानुप्रहरणात् पुनः पार्वणमाद्यविप्राणादयोभयशेषं क्रमेण समापयेदित्येष व्यतिषङ्गस्तामिमसुदाहरिष्यामः

पितृयज्ञोऽपराह्णेऽग्निमुपसमाधाय तस्यैकमुल्मुकं प्राक्
दक्षिणा प्रणयेद्ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया
चरन्ति परा पुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात् प्रणुदात्व-
स्मादिति सोऽग्निरतिप्रणीतो भवति तञ्चोपसमाधायोभौ प्राक्
दक्षिणाग्रैः दर्भैः परिस्तृणीयात्सर्वकर्मणीह प्राग्दक्षिणाऽ-
मयेदथोपासनाग्नेः प्रागुदक् प्रत्यग्वा प्राग्दक्षिणाग्रान्दर्भाना-
स्तीर्य्यैकैकशः पात्राणि प्रयुनक्ति चरुस्थालीं शूर्पं स्फ्यमुलू-
खलं मुसलं स्रुवं ध्रुवां कृष्णाजिनं सकृदाच्छिन्नमिध्मं मेक्षणं
कमण्डलुमिति दक्षिणतो व्रीहिशकटं भवति शूर्पं स्थालीं
प्रगृह्य दक्षिणतः शकटमारुह्य स्थालीं व्रीहिभिः पूरयित्वा
शूर्पे निमृज्य शूर्पपतितान् शकटे प्रास्य स्थालीस्थान् कृष्णा-
जिन उलूखलं कृत्वा पत्न्यवहन्यादविवेचमवहतान् सकृत्
प्रक्षाल्यौपासने श्रपयेदर्वागतिप्रणीतात् स्फ्येन प्राग्दक्षिणा-
यतां लेखामपहता असुरा रक्षांसि वेदिषद इत्युल्लिख्य ताम-
भ्युक्ष्य सकृदाच्छिन्नेन बर्हिषाऽवस्तीर्य्य त्रिलीनानुत्पूतमाज्यं
दक्षिणतो निधाय स्रुवेण स्थालीपाकमभिघार्य्योदगुद्वास्य प्रत्य-
गतिप्रणीतादासाद्य दक्षिणतोऽभ्यञ्जनाञ्जनकशिपूपबर्हणानि
चैतदन्तं पिण्डपितृयज्ञं कृत्वा पार्वणमारभेत् ॥ १२ ॥

अथ हविरर्हान् ब्राह्मणान् दैवे द्वौ त्रीन् पित्र्ये एकैकं
वोभयत्र शक्तावेकस्यानेकान् वा काले निमन्त्रितान् स्वागते-
नाभिपूज्य प्राच्यां शुचौ गृहाजिरे गोमयाम्भसा चतुरस्रमुत्तरं
वर्तुलं दक्षिणे मण्डलद्वयमुल्लिख्य प्रागग्रान् दर्भान् सयवानु-
त्तरेणास्य दक्षिणाग्रान् सतिलानितरस्मिन्नभ्यर्च्य ब्राह्मणा
यथोद्देशं यथावयः पित्र्ये ज्यायांसो दैवे कनीयांसः उभयत्र
दक्षिणेन विनियुञ्ज्यात् प्राङ्मुखा उत्तरे मण्डले दैवनियुक्त-
योर्यवाम्भसा पाद्यं दत्त्वा शन्नो देव्या पादान् प्रक्षाल्य

दक्षिणे चेतरेषां प्राचीनावीती तिलाम्भसा पाद्यं दत्त्वा तथैव क्षालयेत् अथ तानुदकं दिशावान्तानुद्दिष्टरूपान् ध्यायन् परिश्रिते दक्षिणप्रवणे उपलिप्ते गृहे दैवे प्राङ्मुखावुदगपवर्गौ दक्षिणतः पित्र्ये उदङ्मुखान् प्रागपवर्गानुपवेश्याचान्तो यज्ञोपवीती प्राणानायम्य कर्म सङ्कल्प्य दैवे सर्वमुपचारमुदङ्मुखो यज्ञोपवीती प्रदक्षिणं कुर्यादिति पित्र्ये प्राक् दक्षिणामुखः प्राचीनावीती प्रसव्यमथ तिलहस्तः अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु अन्यत्रेतो गच्छन्तु यत्रैतेषाङ्गतं मन इति सर्वतस्तिलैरवकीर्य्योदीरतामवर उत्परास इति जपित्वा दर्भाम्भसाक्षान्यभ्युक्ष्य गयायां जनार्दनं वस्वादिरूपान् पितॄंश्च ध्यात्वाऽथ प्रथमं दैवे ब्राह्मणहस्तयोरपो दत्त्वा युग्मान् ऋजून् प्रागग्रान् दर्भान् विश्वेषां देवानामिदमासनमिति एकैकस्थाने दक्षिणतः प्रदायापो दद्यादेवं सर्वोपचारेष्वाद्यन्तयोरापो दद्यादथाभ्युक्षितायाम्भुवि प्रागग्रान्दर्भानास्तीर्य्य तेषु न्युब्जं पात्रं आसाद्योत्तानयित्वा तस्मिन् प्रागग्रे दर्भयुग्मान्तर्हिते अप आसिच्य शन्नोदेव्या अनुमन्त्र्य यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः। निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्॥ इति यवानोप्य गन्धादीनि च क्षिप्त्वा देवपात्रं सम्पन्नमित्यभिमृश्य यवहस्तो विश्वान्देवानावाहयिष्यामीत्युक्त्वा ताभ्यामावाहयेत्युक्ते विश्वे देवा स आगतेति पादादिमूर्द्धान्तं सव्यसंस्थितयोः यवानवकीर्य्यागच्छन्तु महाभागा विश्वे देवा महाबलाः। ये अत्र विहिता श्राद्धे सावधाना भवन्तु ते॥ इत्युपस्थाय स्वाहार्घ्या इत्यर्घ्यमुभयोः सङ्कल्पितेऽथाय प्रत्येकं प्रथममन्या आपो दत्त्वार्घ्यादर्घ्यमादायेदं वो अर्घ्यमिति दत्त्वा या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञिया-

स्तान आपः शिवा शंयोना भवन्त्वित्यनुमन्त्र्यैवं द्वितीयस्यापि शेषं दत्त्वाऽनुमन्त्र्य गन्धपुष्पधूपदीपान् उभयोर्द्विर्दत्त्वाच्छादनं दद्यात् अथार्चनविधेः सम्पूर्णतां वाचयित्वा पित्रर्चनायानुज्ञातः प्राचीनावीती प्राक् दक्षिणाभिमुखः पित्रर्चनं कुर्यात् ॥ १४ ॥

पिता पितामहः प्रपितामह इति त्रयस्तेषां प्रत्येकमेकं द्वौ बहून्वा निर्दिश्य कुर्यादपो दत्त्वा दर्भान्द्विगुणभुग्नानयुग्मान्दक्षिणाग्रान् गोत्रनामरूपाणां पितॄणामिदमासनमित्येवमासनेषु सव्यतो दद्यादुक्तमपादानमथ भुवमभ्युक्ष्य दक्षिणाग्रान् दर्भानास्तीर्य त्रीणि तैजसाश्ममयमृण्मयानि पात्राण्यभावे एकद्रव्याणि वा न्यक्विलानि प्राग्दक्षिणापवर्गं निधायोत्तानानि कृत्वा तेषु तेष्वयुग्मदर्भान्तर्हितेष्वप आसिच्य त्रीण्यपि सकृच्छन्नो देवीरनुमन्त्र्य तिलोऽसि सोमदैवत्यो गोसवे देवनिर्मितः प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमांल्लोकान् प्रीणयाहि नः स्वधा नम इति पृथक् क्षिपेत् तिलानोप्य गन्धादीन् क्षिपेत् पितृपात्रं सम्पन्नमित्येवं तानि यथालिङ्गमभिमृश्य तिलहस्तो यथालिङ्गं पितॄन् पितामहान् प्रपितामहान् आवाहयिष्यामीत्युक्त्वा तैरावाहयेत्युक्ते मूर्द्धादिपादान्तं दक्षिणाङ्गसंस्पर्शेन कश्चिन् उशन्तस्त्वा निधीमहीति तिलानवकीर्य आयान्तु नः पितरः सोम्यास इत्युपस्थायायोपवीती स्वधार्घ्या इति पूर्वमर्घ्यं निधायाप्यापो दत्त्वा प्रगोपमर्घ्यमादाय दक्षिणेन पाणिना सव्योपगृहीतेन पितरिदन्तेऽर्घ्यं पितामहेदन्ते अर्घ्यं प्रपितामहेदन्तेऽर्घ्यमिति पितृतीर्थेन दत्त्वा प्रत्येकं या दिव्या आप इत्यनुमन्त्रयेतोभयत्रैकैकब्राह्मणपक्षे दैवे सर्वमर्घ्यमेकस्मै दद्यात् पित्र्ये त्रीण्यपि पात्राण्येकस्मै निवेद्य पुनरन्यान्यासनपूर्वं त्रीण्यपि तथा एव दद्यादथैकस्मै ब्राह्मणे-

कर्पचं यावन्त एकैकस्य तेभ्यस्तेभ्य एकैकं तत्पात्रं सन्निवेद्यार्घ्यमेकैकं तावद्वा विभज्य दद्यात् न तु प्रत्येकं पात्राणि कुर्यादथेतरार्घ्यशेषानाद्यपात्रार्घ्यशेषे च निनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति तत्पात्रं शुची पितृभ्यः स्थानमसीति निधाय पितामहार्घ्यपात्रेण निदध्यात् न्युब्जं वा तत् कुर्यादथ प्राचीनावीती गन्धाद्याच्छादनान्तं दत्त्वार्चनविधेः सम्पूर्णतां वाचयेदेवमेतत् पार्वणस्य कृत्वा पुनरनन्तरं पिण्डपितृयज्ञं कुर्यात् ॥ १५ ॥

अथ स्थालीपाकादन्नमुद्धृत्य घृतेनाक्ताऽग्नौ करिष्यामीति पृष्ट्वा क्रियतामित्युक्तोऽतिप्रणीतेऽग्नावेधमुपसमाधाय मेक्षणेनादायावदानसम्पदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वा पूर्वमग्निं यज्ञोपवीती मेक्षणमनुप्रहरेदित्येतावत् पिण्डपितृयज्ञस्याथ पुनः पार्वणस्य भोजनाश्रयेषु दैवे चतुरस्रे मण्डले पित्र्ये वृत्तानि गोमयेनोपलिप्य सयवान् सतिलांश्च दर्भान् मास्य तेषु दैवे सौवर्णं पित्र्ये राजतानि अभावे तदवष्टानि तैजसानि वा पात्राणि निधायाज्येनोपस्तीर्यासनानि परिविष्य पितृपात्रेषु हुतशेषं दत्त्वा दर्भैः पात्राण्युपर्यधश्चाभिच्छाद्य दैवेऽन्नं सावित्र्याऽभ्युक्ष्य तूष्णीं परिषिच्य पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्त्वा मुखेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा मैषां क्षेष्ठा अमुत्रामुष्मिन् लोके इत्यभिमन्त्र्य इदं विष्णुर्विचक्रम इति ब्राह्मणपाण्यङ्गुष्ठं विष्णो हव्यं रक्षस्वेति निवेश्य यवोदकमादाय विश्वे देवा देवता इदमन्नं हविरयं ब्राह्मण आहवनीयार्थे इयं भूमिर्गयायां भोक्ता गदाधर इदमन्नं ब्रह्मणे दत्तं सौवर्णपात्रसमसद्यघटच्छायेयम् इत्युक्त्वा विश्वेभ्यो देवेभ्य इदममन्न-

तद्रूपं परिविष्टं परिवेक्ष्यमाणश्चादाः स्वाहेत्युत्सृज्यैवं द्वितीयेऽपि दत्त्वा ये देवासो दिव्येकादशस्थेत्युपस्थायाथ पित्र्ये प्राचीनावीती राजते स्वधाशब्दविशेषणेन यथालिङ्गमुद्दिश्य ये चेह पितर इत्युपस्थायाथोपवीतान्येषु मधुसर्पिर्वासिच्य सप्रणवव्याहृतिं सावित्रीं मधुमतीश्च जपित्वा मध्विति च त्रिरुक्त्वा पितॄननुस्मृत्यापोशनं प्रदाय ब्राह्मणान् यथासुखं जुषध्वमिति भोजनायातिसृजेत् भुञ्जानान् वैश्वदेवरक्षोघ्नपित्र्यादीनि च श्रावयेदथ तृप्तान् ज्ञात्वा मधुमतीरक्षन्नमीमदन्तेति च श्रावयित्वा सम्पन्नं पृष्ट्वा सुसम्पन्नमित्युक्ते भुक्तशेषात्सावर्णिकमन्नं पिण्डार्थं विकिरार्थञ्च पृथगुद्धृत्य शेषं निवेद्यानुमते गण्डूषं दत्त्वा तेष्वाचान्तेष्वनाचान्तेषु वा तदन्नशेषेण पिण्डान्निपृणीयादथानाचान्तेषु निपृणीयादाचान्तानन्वन्नं प्रकिरेदथाचान्तेषु निपरणमनुप्रकिरेन्न तु पूर्वं निपरणात् प्रकिरेत् ॥ १६ ॥

अथ पिण्डार्थमुद्धृतमन्नं स्थालीपाकेन सम्मिश्र्य प्राचीनावीती सकृदाच्छिन्नास्तृतायां लेखायां त्रिषु पिण्डदेशेषु प्राक्‌दक्षिणापवर्गं शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति पितृतीर्थेन तिलाम्बु निनीय तेषु पिण्डान्, पित्रादिभ्यः एतत्ते पितासौ ये च त्वामत्रानु तेभ्यश्चेति पराचीनेन पाणिना यथालिङ्गं दत्त्वा तान् अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति सकृदनुमन्त्र्य सव्यावृदावृत्योदङ्‌मुखो यथाशक्त्या यतप्राणः प्रत्यावृत्यामीमदन्त पितरो यथाभागमावृषायिषतेति पुनरभिमन्त्र्य च तच्चरुशेषमाघ्राय पूर्ववत्पुनस्तिलाम्बु पिण्डं तेषु निनीयासावभ्यङ्क्ष्वासावभ्यङ्क्ष्वेति यथालिङ्गं पिण्डेष्वभ्यञ्जनाञ्जने दत्त्वा वासो दद्याद्दशामूर्णास्तुकां वा वयस्यपरे सहस्रोमेतद्वः पितरो वासो मा नो ऽतोऽन्यत्पितरो

युंगष्वमित्यथैतानां गन्धादिभिरर्चयित्वा माञ्जलिर्नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तस्यामेति मनोऽन्वा हुवामह इति तिसृभिरुपस्थायाथ पिण्डस्थान् पितॄन् प्रवाहयेत् परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः। दत्त्वा याऽस्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं नियच्छतेत्यग्ने तम- द्येत्योपासनाग्निं प्रच्य्ल्य यदन्तरिक्षं पृथिवीमुत द्यां यन्मा- तरं पितरं वा जिहिंसिम। अग्निर्मा तस्मादेनसः प्रमुञ्चतु करोतु मामनेन समिति जपित्वाऽथ पिण्डानवस्नात्य मध्यमं पिण्डं वीरं मे दत्त पितर इत्यादायाधत्त पितरो गर्भं कुमारं पुष्करस्रजं यथायमरपा असदिति पुत्रकामः पत्नीं प्राशयेच्चे- तदशुभश्राद्धेषु कुर्य्यादवशिष्टरावति प्रणीतेऽग्नौ वा जुहुयात् गवे वा ब्राह्मणाय वा दद्यात् अथ यज्ञपात्राणि द्विवद्वृत्तसृजेत् चद्रिक्तौ ह्रणं द्वितीयं कुर्य्यात् एवं पिण्डपितृयज्ञं समाप्याथ श्राद्धशेषं समापयेत्॥ १७॥

अथ ब्राह्मणानाचमय्य यत्रावर्वर्णिकं पृथगुहूतं तत्राकि- रान्नमम्भसा परिप्लाव्योच्छिष्टान्ते दर्भान् दक्षिणाग्रान् प्रकीर्य्य तेषु ये अग्निदग्धा ये अनग्निदग्धा इति तदन्नं प्रकीर्य्य येऽग्नि- दग्धाः कुले जाता येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्॥ इति तिलाम्बु च निनीयाथमेदय ब्राह्मणहस्तेष्वपो दर्भांश्च दद्यात् यवांस्तिलांश्चाक्षय्यं पुनरपो दद्यादेवा हस्तग्रहिरथ ब्राह्मणानभिवाद्योपवीयादक्षय्यं पर्य्यतामिति गोत्रहर्षिं वाचयित्वा पात्राणि चालयित्वा देवान् पितृंश्च यथालिङ्गमामन्त्र्य स्वस्तीति ब्रूतेत्यपो दद्यात् अथ दैवे

दत्तं श्राद्धं देवानामक्षय्यमस्त्विति ब्रूतेति पृथक् यथाम्बु 'दत्वा पितेर प्राचीनावीतिदत्तं श्राद्धं च पितॄणामक्षय्यमस्त्विति ब्रूतेति यथालिङ्गन्तिलाम्बु दत्वा न्युब्जं पात्रं विधृत्योपवीती ब्राह्मणेभ्यो सुखवासताम्बूलादि दक्षिणाश्च दत्वा तान्यादाभ्यङ्गादिभिः प्रियोक्तिभिश्च परितोष्य कर्म सम्पूर्णतां वाचयित्वा ॐ स्वधोच्यतामिति वाच्य स्वधेति चोक्ता पितृपूर्वं विसर्जयेत् तथा ॐ स्वधेति वास्तु स्वधेति वा ब्रुवन्त उत्तिष्ठ यु विश्वे देवाः प्रीयन्तामिति देवब्राह्मणौ विसर्जयेत् प्रीयन्तां विश्वे देवा इति ताभ्यामुक्ते पिण्डनिपरणदेशं सम्यक्त्याचतान् प्रास्य तत्र शान्तिरस्त्वित्युदकधारामासिच्य दक्षिणामुखः प्राञ्जलिस्तिष्ठन् दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो माव्यगमत् बहुधेयञ्च नोऽस्तु इत्यनेन वरान् याचतेति पार्वणकल्प एव चास्य पिण्डपितृयज्ञेन व्यतिषङ्ग एवमेवान्वष्टक्यं पूर्वेद्युर्मासि मासि श्राद्धानि भवेदस्ति हि तेषु पिण्डपितृयज्ञकल्प इति तत्र पूर्वेद्युरेकतन्त्रस्या होममन्त्राः एभ्योऽन्येषु चतुर्थीहिताग्निपार्वणे च पिण्डपितृयज्ञकल्पाभावात् अभ्यनुज्ञायां पाणिष्वेव इति ब्राह्मणानां पाणिहोमो भुक्तशेषेण वोच्छिष्टान्ते निपरणं यथा ब्राह्मणानाच्छादनान्तैरभ्यर्च्य भोजनार्थादन्नादुद्धृत्य सर्पिषाक्ताद्धोमपक्षं विनैव ब्राह्मणपाणिषु दक्षिणाग्रान् दर्भानन्तर्धाय मेक्षणेन पाणिना वा ताभ्यामेव मन्त्राभ्यां द्वे द्वे आहुती जुहोति सर्वेषु विग्रहे चैकैकां नात्र मेक्षणानुप्रहरणं यदि पाणिना जुहुयात् सव्येन चावदानं सम्पादयेदथ भुक्तशेषेणोच्छिष्टान्ते पिण्डान्निपृणीयान्नेहाग्रे तमयेति समानमन्यदेवं मत्याह्निकादीनि मासि श्राद्धं यदि पर्वणि स्यात् पार्वणं तदा तेन विकल्पते काम्यं चेत् क्रियते तदा पार्वणं मासि श्राद्धञ्च तेनैव सिध्यतः ॥ १८ ॥

अथाभ्युदयिके नान्दीमुखाः पितर एकैकस्य युग्मा ब्राह्मणा ऋजुमूलदर्भा प्रदक्षिणमुपचारो यवैस्तिलार्थः प्राङ्मुखो यज्ञोपवीती कुर्य्यादृजून् दर्भानासनन्दक्षिणतो दद्यात् अर्घ्यपात्राणि प्राक्संस्थानि स्युः यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄन् इमान् लोकान् प्रीणयाहि नः स्वाहेति यवावपनं नान्दीमुखाः पितरः प्रीयन्तामिति यथालिङ्गं मन्त्रादर्घ्यं निवेद्य नान्दीमुखाः पितर इदं वो अर्घ्यमिति प्रत्येकं विसृज्य दत्त्वानुमन्त्रणं द्विदिगन्धादि दद्यात् अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति पाणिष्वन्नहोमस्तृप्तं पूपाश्च गायता नर इति पञ्च मधुमती रक्षन्नमीमदन्तेति श्रावयेदनाचान्तेषु भुक्तवत्सु अनुपलिप्य प्रागग्रान् दर्भानास्तीर्य्य पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात् पूर्वेण मन्त्रेण नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा यथालिङ्गमन्यदुदकेनानुमन्त्रणादीच्छन्ति नेह पिण्ड इत्यन्ये सर्पिषि दध्यानयति एवमेतत् पृषदाज्यमाह सम्पन्नमिति विसृजेत्तदेतत् पुंसवनादिष्वपत्यसंस्कारेषु अग्न्याधेयादिषु श्रौतेषु च पूर्तेषु च क्रियते महत्सु पूर्वेद्युस्तदहरल्पेषु तदिदमेके मातॄणां पृथक् कुर्वन्त्यथ पितॄणां ततो मातामहानामिति वितयमिच्छन्ति तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्य्यात्तस्याञ्जीवत्यां पितृमातामहयोः कुर्य्यात् पित्रोर्जीवतोर्मातामहस्यैव कुर्य्यात् त्रिषु जीवत्सु न कुर्य्यात् त्रिषु जीवत्सु न कुर्य्यात् ॥ १८ ॥

इत्याश्वलायनगृह्यपरिशिष्टे द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

अथ पितृमेधः संस्थिते दक्षिणपूर्वस्यां दक्षिणापरस्यां वा प्राक्‌दक्षिणायतं दक्षिणाप्रवणं तद्दिक्प्रवणं वा यावानुद्बाहुकः पुरुषस्तावदायामं व्याममात्रन्तिर्यगर्वाग्वितस्तिमात्रं खातं खनेयुरभित आकाशं बहुलौषधिकं यत्र सर्वत आपः प्रस्यन्देरन् एतद्दहनस्य लक्षणं श्मशानस्य कण्टकिक्षीरिणः समूलान् परिखायोद्वासयेदपामार्गः शाकस्तिल्वकः परिव्याधांश्च पुत्राः केशश्मश्रुलोमनखानभिहारयेयुः कर्त्ताप्लुत्य प्रेतस्यात्मनश्च ब्राह्मणवाचा शुद्धिमापादयेत् प्रेतं स्नापयित्वा नलदेनानुलिप्य नलदमालाञ्जपमालां वा प्रतिमुच्य सूत्रतोऽहतवाससा पादमात्रमवच्छाद्य शेषेण प्रत्यगग्रेण प्राक्शिरसमाविःपादमाच्छादयेयुः परिधानस्यान्यन्दद्यादवच्छेदं कर्त्ता संगृह्णीयादथ तां दिशमग्रतोऽग्निं नयन्ति प्रभूतं बर्हिराज्यञ्च चमसः स्रुवञ्च तिलान् कृष्णाजिनं कमण्डलुञ्च नयेयुरन्वञ्चं प्रेतमयुजो मिथुनाः प्रवयसः शिविकेन गोशकटेन वा तमन्वञ्चोऽमात्याः सुक्तशिखा अधोनिवीता ज्येष्ठप्रथमाः कनिष्ठजघन्याः नयेयुः एवं भूमिभागं प्राप्य कर्त्ताचान्तः प्राचीनावीती प्रेतस्यामुष्य स्वर्गप्राप्त्यर्थं पितृमेधं करिष्यामीति सङ्कल्प्य कर्मैतद्दक्षिणां दिशं गमयेत् खातादुत्तरपुरस्ताज्जानुमात्रं गर्त्तं खात्वोदकेन पूरयित्वा तेनोदकेनान्येन वा शमीशाखया त्रिः प्रसव्यमादहनं परिव्रजन् प्रोक्षत्यपेतवीत विच सर्पतात इति खातादुत्तरपश्चिमतोऽग्निमिन्धनानि चात्र तन्त्रं भवति ॥ १ ॥

अथाग्नेरुत्तरतश्चमसेनापः प्रणीय खाते हिरण्यशकलमाधाय तिलानवकिरेत् कृणुध्वमिति चिनोति तस्यां बर्हिरास्तीर्य

कृष्णाजिनं चोत्तरलोमं प्रेतमग्निमुत्तरेण कृत्वा दक्षिणशिर-सं पत्नीं संवेशयन्ति तामुत्तरेण पत्नीन्तामुत्थापयेद्देवरोऽन्तेवासी वोदीर्ष्व नार्यभि जीवलोकमित्यथ प्रेतस्य सप्तशीर्षण्यानि हिरण्यशकलैरपिधाय घृतसिक्तान् तिलान् सर्वस्मिन् शरीरेऽवकीर्येममग्ने चमसं मा विजिह्वर इति पूर्णपात्रमनुमन्त्र्य तूष्णीमाज्यमुत्पूयोत्तानोपस्थाय सव्यञ्जान्वाच्य जुहुयादग्नये स्वाहा कामाय स्वाहा लोकाय स्वाहा अनुमतये स्वाहा पञ्चमीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयन्त्वदधिजायतां देवदत्त स्वर्गाय लोकाय स्वाहेति सञ्चयेदग्निमवधून्वन्ति कुशैः चिनोति कर्त्ता शिरसि चाग्निन्ददाति तं ज्वलयेदथैनं दह्यमानमनुमन्त्रयते प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयमुद्धरेन्मैनमग्ने विदहो माभिशोच इति षट् पूषात्वेतश्च्यावयतु प्रविद्वानिति चतस्र उपसर्प मातरं भूमिमेतामिति चतस्रः सोम एकेभ्यः पवत इति पञ्चोरूणसामसुद्यच चतुष्पसाविहितैका स एवं दह्यमानः सहैव धूमेन स्वर्गं लोकमेतीति विज्ञायते गृह्याग्निना दाहोऽनाहिताग्नेस्तत्पत्न्याश्च सभर्तृकायाः कपालजेनान्येषां लौकिकेन च व्याहृतिहोमसंस्कृतेन वा संस्कृतानां लौकिकेन नष्टाग्निरेककपाले चिमकरीषादिजातोऽग्निः कपालजो यथार्थं मन्त्रवत्तूष्णीमसंस्कृतानाम् ॥ २ ॥

अथ कर्त्ता कुम्भमपां पूर्णं दक्षिणेऽंसेऽभिनिधाय सपिण्डानुयातः परशुनाऽश्मना वा पश्चात्कृतच्छिद्रादविच्छिन्नया कुम्भोदकधारयाग्निं परिव्रजन् परिषिच्य तमन्वकशाप्येद-येमे जीवासि मृतैराववृत्रन्निति जपित्वा कनिष्ठपूर्वकाः मध्याहतो व्रजन्त्यनवेक्षमाणा यत्रोदकमवरुद्धमस्ति तत्राप्य सकृन्निमज्ज्य यश्चो तीरे यथायातिस्थूलमुपलं स्थापयित्वा

दक्षिणाग्रेषु दर्भेषु निधाय काश्यपगोत्रदेवदत्तेति एकैकमुदकाञ्जलिं तिलोदकं तस्मिन्नुपले दद्युः स्त्रियश्चैकोदकाः अथोत्तीर्य वासांसि परिदध्युः क्लिन्नानि अधोदशानि सकृदेव निष्पीड्योदक्दशानि विसार्य तथाभीत आनत्त्वदर्शनादादित्ये वा पीतरश्मावागारं व्रजेयुः यानिष्ठप्रथमा ज्येष्ठजघन्याः, प्राप्य आगारं द्वार्यश्मानमग्निं गोमयमक्षतांश्च स्पृष्ट्वा पश्चात् निम्बपत्राणि विदश्याचमेयुः, प्रेतस्य रात्रावमन्नं पचेरन् क्रीतान्नेन लब्धान्नेन वा वर्त्तेरन्नशौचिनोऽक्षारलवणाशिनोऽधःशायिनो ब्रह्मचारिणश्च भवेयुः पयसा पूपादि नाश्नीयुर्न दानादि कुर्युर्नित्यनैमित्तिकमतोऽन्यच्च वर्जयेयुः ॥ ३ ॥

अथ वर्त्तुदकविधिः प्रेतस्यामुष्य रूपः स्वधर्थं प्रमनार्थमुदकपिण्डं दास्यामीति सङ्कल्प्य शुचावुदकान्तेषु दर्भेषु प्रेतोपलं निधाय स्थापयित्वा काश्यपगोत्र देवदत्त प्रथमेऽहन्यपामञ्जलिस्त्वामुपतिष्ठतामित्युपलेऽञ्जलिं तद्विधिना प्रथमेऽहन्येकं दद्यादेवमुत्तरेष्वाद्यमादक्षस्तदहर्गुणितां दत्त्वाऽतीताहाञ्जलींश्चैव यदा दद्यादेवं दशाहेन शतमञ्जलयो भवन्त्यथैके दश दश दद्युरेकैकमेव वान्ये एतदाद्येऽहनि कुर्यात् स एव तद्दशाहं समापयेदथ इत्थं तदुत्तरेषूपलांशेष्वन्यमादाय तत्क्रियामादित आवर्त्तयेदन्तर्दशाहादस्थिसंस्थितेषु द्विचन्द्रो दर्शश्च मिनीशाल्यां क्रियानियमान् कृत्स्नान् समापयेत् पितृयज्ञं यथाकालमेव कुर्यात् ॥ ४ ॥

अथ पिण्डक्रियोदकं दत्त्वोपलाग्रे दक्षिणाग्रेषु दर्भेषु प्राचीनावीती तिलाम्बु निनीय सकृत् प्रक्षालितपक्वमन्नं घृतेनाक्तं तस्मिन् पिण्डं काश्यपगोत्र देवदत्त एष पिण्डस्त्वामुपतिष्ठतामिति तद्दर्विशेषेण दत्त्वा पुनरम्बु च निनीयाने-

नोदकक्रिया पिण्डदानेनामुष्य क्षुत्तृट्क्षुधौ शाम्येतां क्षमिर-
क्लिन्निति ब्रूयादेवं दशाहे दश पिण्डा भवन्ति पुनस्तापिनीय
दद्याद्द्वितीयेऽहनि मृतदेशे मृण्मये पात्रेऽप आपूर्य देवदत्ताव
स्नाहीति शिक्ये स्थापयेदन्यस्मिंश्च आसिच्यैतत् पयः पिबेति
तदुपरि निदध्यादित्येके पृथक् शिक्ये वा दीपञ्चाधो दद्या-
देवमेतदन्वहं कुर्यादथ चाथेऽहनि नग्नप्रच्छादनं वासः श्राद्धं
च दद्यात् न दद्यात् वा श्राद्धद्वयनिषेधादेव सञ्चयनश्राद्धं
सम्पद्यते ॥ ५ ॥

अथ नव श्राद्धानि दशाहेषु विषमदिनेष्वामेन कुर्यात्
प्रेतमभिसन्धाय ब्राह्मणमुदङ्मुखम् उपवेश्य तस्मिंस्तूष्णीं-
स्तिलानवकीर्य्य काश्यपगोत्र देवदत्तामुष्मिन्नहनि एतदामं
त्वामुपतिष्ठतामिति तदहः सम्बन्धेनोत्सृज्य पिण्डं चामन्त्रो-
कवमदाय स्नायादेष विधिरन्तर्दशाहकर्मणि ॥ ६ ॥

अथ सञ्चयनं संवत्सरान्ते चेत्सपिण्डयिष्यन् कृष्णपक्षस्यो-
र्ध्वं दशम्यामयुजासु तिथिष्वथ द्वादशाहे सपिण्डयिष्य-
न्नेदन्तर्दशाहे षष्ठाष्टमदशमाद्वर्ज्यमेकनक्षत्रेषु पुमांसमल-
क्षणे कुम्भे संचिनुयुः कुम्भामलक्षणायां स्त्रियमयुजो
मिथुना वृद्धास्तं देशं क्षीरोदकेन शमीशाखया त्रिः प्रसव्यं परि-
व्रजन् कर्त्ता मोक्षति शीतिके शीतिकावतीत्यङ्गुष्ठोपकनि-
ष्ठिकाभ्यां एकैकमस्थ्युपसंगृह्याऽशब्दयन्तः कुम्भे निदध्युः पादौ
पूर्वं शिर उत्तरं सुसञ्चितं सञ्चित्योपरि कपालेन शूर्पेण सम्पूर्य
दहनलक्षणायां भुवि यत्रैनं वर्षा आपो नालभेरन् तत्र गर्त्ते
च कुम्भमवदध्युरुपसर्प मातरं भूमिमेतामित्ययोत्तरया पांसू-
नव सम्पूर्यात्तराश्चयेदथ कुम्भमुत्तेस्तभ्नामि पृथिवीं त्वत्परीति
कपालेन लक्षणेन पिधाय मृदाच्छादयेद्यथा न दृश्येत्तथ
दाहायतने मृदा वेदिं कृत्वा सेतुमयानभ्युक्षयाहितान् पाङ्-

मुखान् दक्षिणापवर्गान् निधाय मध्यमे प्रेतं उत्तरे श्मशानवासिनः पूर्वमेतान्दक्षिणे तत्सखीयावाह्योपलानलङ्कृत्यार्घ्यपाद्यतस्तेभ्य एकैकं पिण्डमुत्सृज्योदकुम्भं पादुकाच्छत्राणि दद्यादथानवेक्षं गत्वाऽग्न्य स्नात्वागारसमेयुस्तद्देशे मृत्करीषसिकतासु बीजान्वपेयुः श्राद्धं पाथेयन्ददुः । ७ ॥

अथ दशमेऽहनि दन्तादीन् संशोध्य दीपादि मृतदेशादुद्वास्य तमुल्लिख्य शुद्धया मृदा प्रतिपूर्य गृहं संशोध्य बीजाङ्कुराण्यादाय जलाशयमेत्याथ कर्त्ता जलान्ते चतुरस्रां वेदिं कृत्वा त्रीनुपलानभ्यक्तस्नामितान् दक्षिणाग्रसंस्थान् स्थापयित्वा मध्यमे प्रेतं उत्तरे तत्सखीन् दक्षिणे यममित्यावाह्योपलानलङ्कृत्यार्चयित्वा तदन्ते तेभ्य एकैकं पिण्डं दत्त्वोदकुम्भं छत्रपादुकाश्च निवेद्य सर्वतोऽलङ्करणानि दद्यादथ केशादि वापयित्वा ज्ञातिबान्धवाः स्नातास्त्रींस्त्रीनञ्जलीन् प्रेताय दद्युर्नैवासुपलनियमोऽस्य पुरन्ध्र्योऽभ्यक्तस्नाताः शुक्लवाससश्चतुष्पथे प्राञ्जयेयुरथ पूर्णं सपल्लवमुदकुम्भं धृत्वा मन्त्रागारं व्रजेयुरन्येनाग्नेन वा वर्त्तेरन् गृहे वा पचेरन् ॥ ८ ॥

अथैकोद्दिष्टन्तत् त्रेधा भवति नवं मिश्रं पुराणं चेत्यन्तर्दशाहे नवं मिश्राणि मासिकानि चतुर्दश्यादौ पुराणानि, तत्र, नवानि व्याख्यातानि, मिश्राणि प्रतिमासं मृताहे द्वादशमासिकानि तेषामाद्यमेकादशेऽह्नि कुर्युरूनानि चत्वार्यूनमासिकमेकं त्रैपक्षिकमूनषाण्मासिकमूनाब्दिकं चेति तानि तस्य तस्यान्ते चतुरहः कुर्यान्न द्वित्रिपुष्करेषु नन्दाभूतामावास्या भार्गवे कृत्तिकासु कुर्यान्नन्दासु तिथिषु भानुभौमसन्दानां त्रिपादर्क्षाणां च योगे त्रिपुष्करामकर्क्षयोरेकतरयोगे द्विपुष्कराणि तानि इमानि षोडशश्राद्धानि स्वे स्वे काले कृत्वा पूर्णसंवत्सरे मृताहे सपिण्डीकरणं कुर्युरेकेऽर्वाक् सपि-

ण्डीकरणं कृत्वाऽवशिष्टानि स्वकाले प्रत्याब्दिकवत् कुर्युरन्ये-र्वागेकादशमासिकानि कृत्वा सपिण्डीकरणं कुर्वन्ति तानि च पुनः स्वकाले प्रत्याब्दिकवत् कुर्वन्ति तत्र श्राद्धे ब्राह्मणाभावे अग्नौ जुहुयात् पुरुषतृप्तये श्राद्धार्थिकमन्नमादाय वह्निरग्निमुपसमाधाय सव्यं परिसमूह्य पर्युक्ष्योदीरतामवर उत्पराम इति सूक्तेनावर्त्य प्रत्यृचं जुहुयात्प्रेतनाम्ना यमनाम्ना वा स्वाहान्तेन पुनरेतद् ब्राह्मणेऽपि जुहुयात् ॥ ९ ॥

अथैकोद्दिष्टविधिरेक उद्दिश्य एको ब्राह्मण एकमर्घपात्रं माणायैकाहुतिं तदग्निनिमन्त्रणं न दैवं न धूपदीपौ न स्वधा पितृभ्यः शब्देनावाहनं नाभिश्रवणं कृतपादशौचमाचान्तं ब्राह्मणं परिश्रित्य उदङ्मुख उपवेश्य पार्वणवदाचमनादि कुर्यात् तिलोऽसि मन्त्रेण स्वधया पितॄनिमानित्यूहस्तूष्णीं वा तिलावपनं तूष्णीं निवेद्योक्तवद्दत्त्वा तत्पात्रं न्युब्जं निधायोक्तवदाच्छादनान्नभोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा ब्राह्मणस्य पाणौ दर्भानन्तर्धाय देवदत्त स्वाहेति सकृदवदानेनैकामाहुतिं जुहुयात्सर्वहुतमग्नौ नास्त्येतदत्र भुक्तशेषसमीपे-तत्ते काश्यपगोत्र देवदत्तेत्येकः पिण्डः ग्रन्थन्तां पितेति निनयनमन्त्रणादि तूष्णीं नात्र पत्नीं प्राशयेत् दक्षिणां दत्त्वाभिरम्यतामिति विसर्जयेत् ॥ १० ॥

अथ सपिण्डीकरणं संवत्सरे पूर्णे द्वादशाहे वा त्रिमासे वा षण्मासत्रिपक्षयोरप्येके प्रेतं तत्पित्रादिभिस्त्रिभिः सपिण्डयेदविधवा स्त्रियस्तत्पत्न्यादिभिर्विधवास्तद्भर्त्रा पुत्रिकान्तत्पित्रा नैतदनपत्यानां दुर्मृतानाञ्च भवति न पिता पुत्रस्य नाग्रजोऽनुजस्य। तत्र प्रेतायैको ब्राह्मणो दैवे द्वे पित्रे च त्रयो नियमेन प्रेते एकोद्दिष्टं पितृषु पार्वणम्। कृतपादशौचानाचान्तान् द्वौ दैवे पूर्ववदथ प्रथमं प्रेतं अनन्तरं पितॄन् पूर्व-

यथातीतसंस्कारः स चेदन्तर्दशाहे स्यात्तत्रैव तन्तत्रे समापयेद्दूर्ध्वमाहिताग्नेर्दाहादारभ्य सर्वमाशौचं कुर्य्यात् कर्म च यथाकालमन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचं गृहीताशौचयोस्तु कर्माङ्गं त्रिरात्रं तत्र प्रथमेऽहनि संस्कारादञ्जलयः शतं वा दश वा भवन्ति यदा शतं तदा प्रथमेऽह्नि त्रिंशदञ्जलयः त्रयः पिण्डा द्वितीये चत्वारिंशदञ्जलयश्चत्वारः पिण्डाः यस्मिन् सञ्चयनमथ तृतीये त्रिंशदञ्जलयस्त्रय पिण्डा इति विभागोऽथ यदि दशाञ्जलयस्तदा प्रथमेऽह्नि त्रयोऽञ्जलयो द्वितीये चत्वारः सञ्चयनं तृतीये च त्रयः एकैकः पिण्ड इति विभजेत्तत्रयाद्दानि प्रथमेऽह्नि द्वितीये द्वे एकस्तृतीये दद्यादेकैकमेव वा यथा प्राप्तमन्ये दाहादृत्ताशौमि संस्कुर्यात्तोऽयमतीतसंस्कार उदगयने शुक्लपक्षे प्रशस्तः तेनैव नन्दा त्रयोदशीभूतदिनत्रयेषु कुर्य्यात् न सौरिशुक्रयोर्याम्याम्न्ये न्द्राद्रीश्लेषामघामूलधनिष्ठापञ्चकं त्रिपुष्करेषूत्तराभ्यां चैषु रोहिणीपुनर्वसुफाल्गुनीचित्राविशाखा अनुराधापूर्वाषाढा द्विपुष्करेषु च नेत्यन्ये नैव व्यतीपाते वैधृतौ विषुवे न च कर्मयतुर्थाष्टमद्वादशचन्द्रमसि न च काकादिस्वर्गोपहतेषु प्रेतेषु कुर्य्यात् तानि गोक्षीरेणाष्टशतं कृत्वा द्वादश कृत्वा वा पवमानीभिः शुद्धिमतीभिश्च चालयित्वा संस्कुर्य्यात्, अस्थ्यभावे पालाशप्रतिरूपकं कुर्य्यात्, त्रीणि शतानि षष्टिश्च पलाशवृन्तानि चाहृत्य तैर्यथावयवं पुरुषरूपं कुर्य्यात्। ११॥

अथ पालाशविधिः। शिरश्चत्वारिंशता ग्रीवां दशभिः उरस्त्रिंशतोदरं विंशत्या बाहू शतेनाङ्गुलीर्दशभिरिति, तदूर्णातन्तुबन्धैः पुरुषवत् कृत्वा स्नापयित्वा वाससा चाहतेनाच्छाद्य यथावत्संस्कुर्य्यात् सञ्चयनकर्मणा च तत् संहृत्य पुण्येऽम्भसि क्षिपेत् एवं दुर्मृतानां पालाशविधिमेव कुर्य्यात् शरीराधि

च तेषां संहतानां क्षिपेत् त्रेताग्नीनप्सु क्षिपेत् गृह्यं चतुष्पथे यज्ञपात्राणि दहेत् संस्कारश्च तेषामब्दादूर्ध्वं यथाह कर्त्रं नारायणबलिं कृत्वा कुर्यादधिकं प्रायश्चित्तं कृत्वा सद्य एव वा तेषामाशौचम् आहिताग्निषु पूर्णं त्रिरात्रमन्येषु ॥ १४ ॥

अथ नारायणबलिरर्वाक् संस्काराच्छुद्धे काले शुक्लैकादश्यां स्नातः शुचौ देशे विष्णुं वैवस्वतं प्रेतञ्च यथावदभ्यर्च्य तदग्रे तिलमिश्रान् मधुघृतप्लुतान् दशपिण्डान् विष्णुरूपं प्रेतं ध्यायन् काश्यपगोत्र देवदत्तायन्ते पिण्ड इति दक्षिणाग्रेषु दर्भेषु दक्षिणमुखः प्राचीनावीती पराचीनेन पाणिना दत्त्वा पिण्डान् गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यां क्षिपेत्। अथ रात्रावयुग्मान् ब्राह्मणान् निमन्त्र्योपोषितः श्वोमध्यन्दिने विष्णुमभ्यर्च्य प्रेतमुद्दिश्य ब्राह्मणानेकोद्दिष्टविधिना भोजयित्वा तृप्तेषु ब्राह्मणसमीपे पिण्डविधिना निनयनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय विष्णो श्यन्ते पिण्ड इत्येवं चतुरः पिण्डाननुक्रमेण दक्षिणसंस्थं दत्त्वाऽथ पञ्चमं काश्यपगोत्र देवदत्तेति प्रेतं ध्यात्वा तद्रूपाय विष्णवे विष्णोऽयन्त इति दद्यात्, अथाचान्तान् दक्षिणया सन्तोष्यैकन्तेषु गुणवन्तम् अविशेषतो वस्त्राभरणादिगोहिरण्यैः प्रेतबुद्ध्या तोषयेत्, अथ तैः पवित्रपाणिभिः प्रेताय काश्यपगोत्रायायन्ते तिलोदकाञ्जलिरिति तिलोदकं दापयित्वाऽनेन नारायणबलिकर्मणा भगवान् विष्णुरिमं देवदत्तं शुद्धमपापं कर्माहं करोत्विति वाचयित्वा विसर्जयेत नारायणबलिकल्प एवमन्यामपि स्वाभिमतदेवतां यमद्वितीयामभ्यर्च्य विधिमिमं कुर्यात्सोऽप्येनमपापङ्करोति न तु पुत्रकृतोऽपि बलिमेनमकृत्वा पारलौकिकं कुर्यात् कृतं नोपतिष्ठते तत्सर्वं विनश्यति तस्माद्यथासम्भवमपि कुर्यात् ॥ १५ ॥

अथ नागबलिः सर्पहतानान्दारुमयं मृण्मयं वा पञ्चफणं सर्पं कृत्वा भाद्रपदस्यान्यस्य वा मासस्य शुक्लपञ्चमीमारभ्य यावत् संवत्सरं प्रतिमासन्तस्यामुपोषितो रात्रौ पञ्चामृतैः स्नापयित्वा शुक्लवाससी शुचिः सुरभिगन्धपुष्पधूपदीपैरभ्यर्च्य प्रणमेदनुमासमेकैकमनन्तं वासुकिं शेषं पद्मकम्बलं कर्कोटकमश्वतरं धृतराष्ट्रं शङ्खपालं कालीयन्तक्षकं कपिलमिति पायसमपि क्षीरापूपैर्बलिमुपहृत्य जागरित्वा श्वो भूते विहिताशेन ब्राह्मणान् भोजयित्वा पूर्णे संवत्सरे पञ्चम्याञ्च स्नात्वा सौवर्णं सर्पञ्चाद्य ब्राह्मणाय दत्त्वान्यांश्च यथेष्टं भोजयित्वा दक्षिणया तोषयित्वा नागान् प्रीतिं वाचयेदेष नागबलिरथोभयोः पक्षयोः पञ्चमीषु संमृष्टायां भुवि पिष्टेन सर्पं विलिख्य शुक्लसुरभिगन्धादिभिरभ्यर्च्य क्षीरमोदकान् निवेद्योपस्थाय मुञ्च मुञ्च देवदत्तमिति प्रार्थ्य सद्भिमन्त्रैर्मधुरमश्नीयादेवं संवत्सरान्ते नारायणबलिवोक्तवत् कृत्वा तत ऊर्ध्वं कर्म कुर्य्यात्। १६॥

अथ पुराणमेकोद्दिष्टं प्रेतचतुर्दश्यां शस्त्रहतानामिष्यते प्रत्याब्दिके च व्युत्क्रममृतानां सर्व्वेषां प्रत्याब्दिक इत्येके पार्व्वणैकदेशवत्तन्त्रं सर्वं पितृशब्दमेकवद्रूहेत् प्राणो सोमाग्निमन्त्राभ्यामेव होमो नैकेऽत्रापि देवं कुर्व्वन्ति मार्चेऽपिण्डावपीडके। १०॥

अथ वृषोत्सर्गः शूलगवं कार्त्तिक्यां पौर्णमास्यां चैत्र्यां वा रेवत्यां वाश्वयुजीयस्य गोर्जीवत्प्रजायाः पयस्विन्याः सुतं श्रेष्ठं स्वस्य यूथस्याकुष्ठिमपृष्ठतमेकहायनं द्विहायनं वा नीलं बभ्रुं पिङ्गलं लोहितं वा लक्षण्यमित्येके काममलक्षणमपोषितं चतसृभिः सह वत्सतरीभिश्चतसृभिर्वा व्रीहियवमतीभिर्व्रीयापोहिष्ठीयाभिश्चान्त्येन कर्म्म संस्कृत्य पूर्व्ववदग्निमिधि-

वापान्तीरे गोष्ठे चतुष्पथे वाग्निमुपसमाधाय रौद्रं स्थालीपाकं सर्वहुतं हुत्वा सौम्यं पायसं पैष्टं यावकं पूर्णमासोदकेन मार्जयित्वाग्निं त्रिः प्रदक्षिणं पर्यानीय कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वने गिर इति सूक्तैस्ततो दिश उपस्थाय प्राञ्चं प्रागुदञ्चं वा वत्सतरीसमेतमुत्सृज्य एतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण इमाञ्च त्वां प्रजया सुवाचा रायस्पोषेण समिषा चिनोमि शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परियान्तु सर्वत इत्यृषभं मासमानानामिति च सूक्तेन उपस्थाय स यत् पिबति खादति लाङ्गूलोदकपूर्णमुदस्यति तेन देवानृषीन् पितॄंश्च प्रीणाति वंश्यांश्च सप्तममुभयतः परावरानुद्धरति प्रेतार्थमुत्सृष्टं सद्यो नरकादुत्तारयति तस्मादेकादशेऽह्नि प्रेताय वृषमुत्सृजेदाद्यमासिकं दत्त्वा सोऽयं वृषोत्सर्गः स्वर्ग्यः पशव्यो वृषभमुत्सृज्य महायशा भवतीति विज्ञायते नानुत्सृष्टः स्यादित्याचार्यः तस्मान्नित्यमेके रुद्रमेव जयन्ते स एव पशुपतिरिति शन्तातीयस्तपन् गृहमेत्य सर्पिरौदनं ब्राह्मणान् भोजयित्वाग्नीरुद्रः सर्वः पशुपतिरुग्रः शूली भवो महादेव इति नामभिरर्चयेद्रुद्रमेव वा, यथाऽऽसम्भवमुद्दिशेत् स्वस्त्ययनं वाचयेदेवमेतानि कर्माणि यथोक्तं कुर्यात्सर्वाणि श्रेयांस्याप्नोति तदेतदाश्वलायनगृह्यपरिशिष्टम् । नम आश्वलायनाय नम आश्वलायनाय ॥ १८ ॥

इत्याश्वलायनगृह्यपरिशिष्टे तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः।

अथ पूर्त्तान्युदगयन आपूर्य्यमाणपक्षे ज्योतिर्विदुक्तपुण्यदिने पूर्वेद्युः कृतस्वस्तिवाचनस्तत ईशान्यां चतुरस्रां चतुरङ्गुलमुच्छ्रितां हस्तमात्रां वेदिं कृत्वा यथोक्तविधानेन वास्तुमण्डलं कृत्वा गृह्योक्तवदुदीच्यमभिषेककुम्भं विधायामीत्युच्यते वास्तुमूर्त्तिं सुवर्णेन कृत्वाऽग्न्युत्तारणं सम्पाद्य. प्रणवव्याहृतिपूर्वकं ॐ नमो भगवते वास्तुपुरुषाय महाबलपराक्रमाय सर्वदेवाधिवासाश्रितशरीराय ब्रह्मपुत्राय सकलब्रह्माण्डधारिणे भूभारार्पितमस्तकाय पुरपत्तनप्रासादगृहवापीसरःकूपादिसन्निवेशसान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वम्भराय परमपुरुषाय चक्रशार्ङ्गधराय वरदाभयहस्ताय वास्तो नम इति मन्त्रेणैशान्यशिरसं नैर्ऋतिपादमाग्नेयजानुकं वायव्यकूर्परमाकुञ्चितकरमुत्तानं वास्तुपुरुषं वास्तुमण्डले आवाह्याथ प्रागुदीच्यामारभ्य प्रणवादिनमोऽन्तनाम्ना शिखिनं पर्जन्यं जयन्तं कुलिशायुधं सूर्य्यं सत्यं भृशमाकाशं वायुं पूषणं वितथं गृहक्षतं यमं गन्धर्वं मृगराजं मृगं पितॄन् दौवारिकं सुग्रीवं पुष्पदन्तं वरुणं असुरं शोकं पापं रोगं मर्वों मुख्यं भल्लाटं सोमं सर्वानदितिञ्च संपूज्याथेशानकोणद्वयशिष्टपदेष्वपः सावित्रीमेकादशरुद्रान् पूजयित्वा ब्रह्मभवनस्य पूर्वादिचतुर्दिक्ष्वग्न्यादिचतुर्दिक्षु च तिष्ठन्ति तेषु क्रमेणार्य्यमणं सवितारं विवस्वन्तं विबुधाधिपं मित्रं राजयक्ष्माणं पृथ्वीधरमापवत्सञ्च पूजयित्वा मध्ये ब्रह्माणं सम्पूजयेत् ब्रह्मणमादितः कृत्वा शिख्यन्तमित्येके ॥ १ ॥

अथ बहिर्मण्डलादीशान्यादिचतुर्दिक्षु चरकीं विदारकीं पूतनां पापराक्षसीमथ प्रागादिषु स्कन्दमर्य्यमणं जृम्भकं पिलिपि-

ञ्च पूजयित्वौदनपायसाज्यदधिमधुशाकसूपसमन्वितनाना-
भक्ष्याणि समर्थ्य प्रणम्य तत्समीपे यवगोधूमनिष्पावमुद्गमापादि-
समग्रं बलिं दत्त्वा, यज्ञभागं प्रतीच्छस्व पूजां चैव बलिं मम ।
नमो नमस्ते देवेश भव स्वस्तिकरो मम ॥ इति संप्रार्थ्य परिवा-
रदेवताभ्यो बलिं दत्त्वाथ वास्तुसमीपे हस्तमात्रकुण्डे स्थण्डिले
वा गृह्यविधिनाग्निं प्रतिष्ठाप्यान्वाधायाज्यभागान्तं कृत्वा वास्तो-
ष्पते प्रतिजानीह्यस्मानिति चतसृभिश्च होमं कृत्वा शिख्यादि-
पिलिपिञ्जान्तान् आज्येन हुत्वा होमशेषं समाप्याथ यज-
मानो वास्तुमूर्तिं रौद्रकोणेऽधोमुखीं गर्त्ते प्रच्छादयेदाचार्याय
वा दद्यादथाचार्यं गोहिरण्यादिभिः परितोष्य नमस्कृत्य समा-
पनेदन्येभ्यो ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दत्त्वा कृतमङ्गल-
स्नानो ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयेदथ लब्धविप्राशीः
सह बन्धुभिर्भुक्त्वा यथासारं मठादेः प्रतिष्ठां कुर्यात् इति
वास्तुपूजनविधिः ॥ २ ॥

अथ प्रतिमाद्रव्याणि मुक्ताफलशिलादारुहेमताम्ररजत-
कांस्यमृत्तिकादीनि, महानीला यशःप्रदा दारुजा कामदा
सौवर्णा भुक्तिमुक्तिप्रदा राजता स्वर्गदा ताम्रमयी आयुर्वर्धिनी
कांस्या व्याधिहन्त्री पैत्तली शत्रुनाशिनी शैला सर्वभोगप्रदा,
स्फाटिका दीप्तिदा रत्नमयी महाभोगप्रदा दशाङ्गुला पञ्चा-
ङ्गुला वा गृहे प्रतिमा पूज्या नाधिका, अधिकाङ्गा शिल्पि-
हन्त्री कृशा शान्त्यर्थनाशिनी कृशोदरी दुर्भिक्षकरी निर्मांसा
धननाशिनी वक्त्रहीना दुःखप्रदा पादकृशा दुःखदा हीन-
नासा भ्रमकरी हीनजङ्घोन्मादकरी हीनवक्षःस्थला पुत्रमित्र-
नाशिनी कटिहीना मरणदा सम्पूर्णावयवायुर्लक्ष्मीप्रदा ।
शालग्रामनर्मदामूर्तिवैदूर्यजङ्काश्मीरनसूर्यकान्तस्फाटिकर-
स्राशनिवज्रगारुत्मजमूर्त्तीनामपि, प्रतिष्ठाविधिं कुर्याच्च-

मूर्त्तिप्रतिष्ठां गर्वान्मोहाम्मूढभावादकृत्वा पूजने सर्वोपद्रवदारिद्र्यरोगाद्यभोनिन्द्याऽचिरायुरपुत्रिताः भवन्ति, प्रतिष्ठाविधिमकृत्वा प्रतिष्ठाकारयेति पूर्वोक्ता दोषाः, प्रतिष्ठाकरणे महाभाग्यसिद्धिरिति ॥ ३ ॥

अथ शुभे भूते नित्यं निर्वर्त्य श्रुतशीलवृत्तसम्पन्नं गृहस्थमाचार्य्यं ऋत्विजश्च तादृशान् षोडशाष्टौ वा चतुरो वा विधिना वृत्वा मधुपर्कं विधाय वस्त्रालङ्करादि तेभ्यो दद्याद् द्विगुणमाचार्य्याय ततस्तूर्य्यवेदघोषैः प्रतिष्ठास्थापनान्तं कृत्वा प्रासादाग्रे दशहस्तस्थानं चतुर्द्वारं प्रागारभ्य प्लक्षोडुम्बराश्वत्थन्यग्रोधतोरणलसद्द्वारशाखं हेमरत्नकृष्णधूम्रमौक्तिकविचित्रश्वेतवर्णध्वजपताकादिभिः पूर्वादिष्टदिक्षुशोभितं मण्डपं तन्मध्ये चतुरस्रां तत्परिमाणसंख्यामितहस्तोच्छ्रितां वेदिकां कारयेत्तथा प्रागादिकुण्डान्युक्तलक्षणानि हस्तमात्राणि चतुरस्राणि, यासयोनिमेखलानि स्युः पञ्चचतुरेककुण्डविधानेन यथाशास्त्रं कुण्डमीशान्यां सर्वहोमसाधनं प्रतिष्ठाप्य मण्डपस्योत्तरतो देवस्नानमण्डपः शुभद्रव्यैः कृत्वा सर्वाभिषेकसाधनानि स्थापयित्वेति तिष्ठेति देवं प्रासादं प्रादक्षिण्येनानीयाक्रम्येनेति स्नानमण्डपे प्रवेश्य वेदिकास्तीर्णशय्यायामास्तीर्णायां सोपस्करायाममुकं स्थाप्यामूरर्जेति रथमारोप्य गन्धादिना सम्पूज्य ब्राह्मणैः सह शान्तिसूक्तपाठैस्तूर्यघोषैश्च शास्तीर्णायां सोपस्करायामवस्थाप्य सर्वसम्भारान् सम्भृत्य कर्त्ता स्नातः प्राणानायम्य प्रतिष्ठाप्य देवतामन्त्रेण विविधं न्यासं कृत्वा पुरुषसूक्तेन वा देशकालौ स्मृत्वा ॐ प्रतिष्ठाहं करोमीति सङ्कल्प्य द्वारज्ञापकं ऋत्विजाचार्य्यांस्तत्कार्य्ये नियोजयेत् ॥ ४ ॥

अथाचार्य्यः प्राणानायम्य मन्त्रदेवतामयो भूत्वा यागभूमिं

प्रासादं स्नानशालायामापोहिष्ठेति तिसृभिः कुशोदकेनाभ्युक्ष्य सितसर्षपान् प्रकीर्य देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्वेति रक्षां कृत्वा प्रतिद्वारं कलशद्वयं सोदकं सपल्लवं प्रतिष्ठाप्य लोकपालानावाह्यार्चयित्वा देवस्नानशाला-कृत्वा प्रणिपत्य देवं प्रार्थयेत्। स्वागतं देवदेवेश विश्वरूप नमोऽस्तु ते। शुद्धेऽपि त्वदधिष्ठाने शुद्धं कर्म सहस्वतामित्यथ देवाधिष्ठानं शुद्धेन घृतेनाभ्यज्य यवगोधूमचूर्णैरुद्वर्त्योष्णोदकेन स्नापयित्वा शीतलजलेन संस्नाप्य पीठान्तरेऽवस्थाप्य दिव्यधूपेन धूपयित्वा पुष्पैः सम्पूज्य नवोत्तमेन वाससा वेष्टयित्वा परमान्नेन बलिन्दत्वाथ देवमभ्यर्च्य गजाश्वरथ्यावराहोत्खात-वल्मीकपर्वतसङ्गमह्रदराजद्वाराग्निहोत्रगोष्ठचतुष्पथवृषभशृङ्ग-स्थानानीतमृदा द्वादशकृत्वः सम्यक् शोध्य जलेन प्रक्षाल्य क्षीरवृक्षकषायैः पञ्चाशदोषधीः कषायेण तीर्थजलेन पञ्चामृतेन पञ्चगव्येन रत्नोदकेन फलोदकेन पुष्पोदकेन शृङ्गोदकेन शङ्खोदकेन श्रीसूक्तपवमानेन पुरुषसूक्तादिमन्त्रान् पठन् संस्नाप्य पीठान्तरे निवेश्याभिवस्त्रेति वस्त्रयुग्मेनावेष्ट्याक्षत-गन्धपुष्पधूपदीपाष्टकमहानैवेद्यैः सम्पूज्य तैजसपात्रं मधुसुवर्णशलाकया गृहीत्वा चित्रं देवानामिति पार्श्वे स्थित्वा सतूर्यघोषमेकैकं समं उन्मीलयेदथादर्शसुवर्णेन भक्ष्यभोज्यानि दर्शयेच्च लिङ्गादिषु कुर्यादथाचार्याय धेनुं ब्राह्मणेभ्यश्च यथाशक्ति हिरण्यन्दत्त्वाथ पुरुषसूक्तेन देवं स्तुत्वोत्तिष्ठ ब्रह्मणस्पत इत्युत्थाप्य कर्त्ता विश्वतश्चक्षुरित्युत्थाप्य रथे तिष्ठन्निति रथमारोप्य कनिक्रददिति सूक्तपाठैः सतूर्यघोषैः मण्डप-प्राग्दक्षिणोत्तरद्वारेणाक्षतेनेत्यानीय वेद्यां कुशप्रस्तरे कशिपौ शुभवस्त्रेणाच्छाद्य तत्र प्राक्शिरसं शाययेत् स्थविरप्रदेशे वस्त्र-वेष्टितं सपल्लवं सोदकं कलशं प्राजापत्योऽयं सुहर्षमस्त्वित्युक्त्वा

मण्डलद्वयोपरि प्रणवेनावस्थाप्य समस्तालङ्कारभोज्यमङ्गलद्र-
व्याण्यवस्थाप्य श्वेताविलोमसूत्रकङ्कणं प्रतिमाया हस्ते बध्नी-
यात् यदा बध्नातीत्यथ देवं पुरुषादीनि पञ्चविंशतितत्त्वानि
प्रवेश्य दिव्यवाससाच्छाद्य देवं संस्मृत्य पुरुषसूक्तेन स्तुत्वा
पुष्पाञ्जलिं दत्त्वा गन्धपुष्पादिभिर्मण्डपं वेदीं चाभ्यर्च्य तदुपरि
देवस्याग्रे चतुरस्रं मण्डलं कोणेषु स्वस्तिकलां स्थितङ्कृत्वा
तन्मध्ये ब्रह्मविष्णुशानं प्रतिदिशं लोकपालांस्तदन्तरालेऽष्ट-
भैरवानेकादशरुद्रान् द्वादशादित्यविश्वेदेवसाध्यानासत्यमरु-
द्गणगन्धर्वाप्सरसः पितृगणपुण्यतीर्थान्यथ विघ्नेशस्कन्ददुर्गाक्षेत्र-
पालान्यथावकाशमावाह्य तत्तन्नामभिस्तल्लिङ्गमन्त्रैर्वार्चयित्वा
प्रतिष्ठाप्य देवपार्षदेभ्यो नम इत्यर्चां कुर्यात् ॥ ५ ॥

अथाचार्यः श्रोत्रियागारादग्निमाहृत्योक्तवत् स्वकुण्डे प्रति-
ष्ठाप्यान्वाधाय देवस्यास्य कलासन्निधिसिद्ध्यर्थं यक्ष्य इति सङ्कल्प्य
प्रणीतास्थापनान्तं कृत्वा तत्र प्रतिष्ठाप्य देवमावाह्य तत्काय-
मन्त्रैर्व्याहृतिभिर्वा पलाशोडुम्बराश्वत्थापामार्गसमिदाज्यचरु-
तिलैरष्टसहस्रमष्टशतमष्टाविंशतिं वा जुहुयात्तत्राज्यमाहुति-
सम्पातं प्रतिकुम्भं स्थापितशान्तिकलशेषु निक्षिपेत्ततः शिरस्यु-
रसि पादयोः प्रतिमां स्पृष्ट्वा स्विष्टकृदादि हुत्वा पूर्णाहुतिं
जुहुयादेवमृत्विजोऽपि स्वस्वकुण्डे जुहुयुरथ मण्डपस्थकलशोद-
केन समुद्रज्येष्ठा इति चतसृभिः आपोहिष्ठेति तिसृभिरभि-
षिच्य प्रतिष्ठाप्य देवमन्त्रेण संस्रावकलशोदकेन संस्नाप्याम्बयो-
यन्त्यध्वभिरिति सूक्तेन शुद्धोदककलशेनाभिषिच्य वस्त्रयुग्मे-
नाच्छाद्य पञ्चोपचारैः सम्पूजयेदित्यधिवासनं, त्रिरात्रमेकरात्रं
वा सद्यो वा कुर्यात्तद्रात्रौ पिचिवभूयिष्ठाद्ये मावस्थापयेत्
लिङ्गमन्त्रेण भूतबलिन्दत्त्वा यजमानो द्विजेभ्यश्च मिष्टान्नमधि-
रासंख्यया यावद्दक्षिणां दद्यात् ॥ ६ ॥

अथ श्वोभूते गर्भगृहे स्थापितपीठे देव्या देवस्य वा अभिषेकं कृत्वा मही मू षु मातरमिति देवमावाह्यादितिर्द्यौरिति स्तुत्वा तल्लिङ्गमन्त्रेण षोडशोपचारैः सम्पूज्य प्र व इन्द्राग्नी इति सूक्तेन प्रासादं प्रोक्ष्य देवं प्राप्योत्तिष्ठेत्युत्थाप्य तत्रैवाभिमुखं कृत्वा रथादि प्रदर्श्य पुष्पाञ्जलिं दत्त्वा पुरुषसूक्तेन स्तुत्वाऽऽकृष्णेनेति मन्त्ररथेन गर्भगृहं प्रवेश्याभ्यर्च्य पीठिकागर्भे रत्नं प्रागादिदिक्ष्विन्द्रादिनामभिर्नमोऽन्तैर्वज्रमौक्तिकवैदूर्यशङ्खस्फटिकपुष्परागेन्द्रनीलप्रवालान् क्रमेण क्षिप्त्वा गोधूमयवमुद्गनीवारव्रीहिसर्षपश्यामाकतिलानारोप्यादिधातुजातञ्च क्षिपेत् सुवर्णगरुडं विष्णोः शम्भोस्तु वृषभं सर्वत्र नमः शिवायेति निक्षिप्याथ सुलग्ने देवमन्त्रेण प्रतिष्ठाप्य प्रतिष्ठितपरमेश्वर इत्युक्त्वा शलाकामपसारयेदथ देवं स्पृष्ट्वा तन्मयो भूत्वा ध्रुवा द्यौरिति सूक्तं जपित्वा प्रणवेन देवेऽङ्गन्यासं कृत्वा पुरुषसूक्तेन वा कर्णे सप्रणवव्याहृतिगायत्रीं जपित्वाचार्य्यः पुरुषसूक्तेनोपतिष्ठेताथ यजमानः स्वागतं देवदेवेश मद्भक्त्या त्वमिहागतः। प्राकृतं त्वाम् संदृष्ट्वा बालवद्भक्तवत्सल। इति सकलमर्थं समर्प्य प्रपद्य पुष्पाञ्जलिं दद्यात्। ७।

तीर्थोदकैर्गङ्गादिनदीनीरमावाह्य ब्राह्मणैः सहाभिषेकं कुर्य्या-दथ यजमानस्याभिषेकं कुर्य्युः सर्वे जलक्रीड़ाञ्च प्रतिष्ठोपकर-णमाचार्य्यस्याचलप्रतिष्ठायान्तु कुण्डमण्डपवेदिकरणं तवाचार्य्य एव पूर्ववदभिषिच्याभ्यर्च्य सर्वतोभद्रमण्डले दिव्यपीठे देव-सुपवेश्य पूर्वादिदिक्षु वस्त्रचूतपल्लवोपशोभितजलपूर्णकलशा-नवस्थाप्य दीपान् प्रज्वाल्य गन्धेन त्रिनेतज्योतिः प्रकल्प्य चित्रबलिं दत्त्वा देवमभ्यात्म स्मृत्वा पुरुषसूक्तेन स्तुत्वाङ्ग-देवताः सम्पूज्य पूर्ववत् प्रतिद्रव्यं हुत्वा देवस्याज्याहुतिसम्पात-श्चेत्युत्तरकलशे चिप्त्वा पूर्णाहुतिं हुत्वाथ कर्त्ता कृताञ्जल्याशो ह्यस्तु देवमानीय पुष्पे च प्रतिमायां प्रतिष्ठाप्य पञ्चामृतपूर्वक-सम्पादितकलशोदकेन इदम् आप इत्यभिषिच्याभ्यर्च्य देवा-र्चनदक्षिणादानादिकं पूर्ववदाचरेत् ॥ ८ ॥

अथ वाप्यादिविधिः। प्रागुदक्प्रवणे शुचौ देशे ब्राह्मणैः सह गत्वा पुण्याहवाचनादिवास्तुपूजनान्तं कृत्वा आचार्य्यादि ऋत्विग्वरणकुण्डमण्डपाद्युक्तप्रकारेण कृत्वा यजमानसम्मितं चौरस्रं पूर्वमण्डपप्रागभावेऽवस्थाप्य वेदिमध्ये पद्म-गर्भं षोडशारमपरितश्चतुरस्रमण्डलोपेतं कृत्वा आचार्य्यः पद्ममध्ये सपत्नीकः ब्रह्मविष्णुशानां विनायकस्य च सौवर्ण-रूपाणि तल्लिङ्गमन्त्रेण समन्तात्तेषु स्वर्णजलचराणि स्थापयि-त्वा वरुणमन्त्रेणार्चयित्वा तद्वहिर्लोकपालादीन् सम्पूज्य म-ण्डलप्रतिकोणं कलशचतुष्टयनद्युदकमङ्गलद्रव्यवस्त्राद्यलङ्कृतं स्थापयित्वेमं मे गङ्गे इति गङ्गादिनदीमावाह्याभ्यर्च्य वारुणं चरुं कृत्वा समुद्रज्येष्ठा इति चतसृभिः प्रत्यृचं गायत्र्या वाज्या-हुतीर्हुत्वा तत्त्वा यामीति पञ्चभिस्त्वन्नो अग्ने वरुणस्येति द्वाभ्यामिमं मे वरुणेति चैकया चर्वाहुतीः स्विष्टकृतं हुत्वा अष्टशीत्यर्थं वरुणमन्त्रैः समिदाज्यं हुत्वा शान्तिकशर्यैर्ज-

मानञ्चाभिषिञ्चेयुः स तु तेभ्यो गवां सहस्रं शतं पञ्चाशतं
शक्ते तु सवत्साङ्गामलङ्कृतां सूर्यमन्त्रेण पाययित्वा तडाग-
नैर्ऋतादारभ्येशानान्तं हिरण्यवतीत्युत्तरया आपो अस्मानिति
स्वयं तत्पुच्छं गृहीत्वोत्तरेत् छन्दोगाय तां च गां दत्त्वा
तत्कालमत्स्यस्वर्णजलचरान्तज्जले निक्षिप्य पुष्पाञ्जलिं दत्त्वा
देवपितृमनुष्यादयः प्रीयन्तामिति दद्यात् पूर्ववदाचतुर्थाहमुत्स-
यादिवसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिरेषु तज्जलं स्थितमश्वमे-
धराजसूयाग्निष्टोमोक्थ्यवाजपेयातिरात्रफलमिति ॥ ९ ॥

अथारामेष्वप्येवं विशेषस्तु स्वस्तिवाचननान्दीश्राद्धवेदि-
कुण्डमण्डप ऋत्विगाचार्यवरणादिपूर्ववत् कृत्वोक्तलक्षणस्य
पद्मस्य मध्यदलबहिर्देशेषु ब्रह्मादीन् लोकपालानभ्यर्च्य वृक्षा-
दीन्मङ्गलस्नानं वस्त्रगन्धादिना सम्पूज्य तेषु स्वर्णरूप्यफलानि
बध्वा फलिते नेत्रे स्वर्णशलाकाञ्जनेनाक्ता सुवर्णसूच्या कर्ण-
वेधं कृत्वाग्निं प्रतिष्ठाप्य सोमो धेनुमिति ऋचा सौम्यचरुं-
हुतिं हुत्वा स्विष्टकृदादि कृत्वाथ तथैव समिदाज्यतिलानष्ट-
शतन्तदर्धसंख्यया वा हुत्वा कर्मशेषं समाप्य शान्तिकलशैर्य-
जमानञ्चाभिषिञ्चेयुः स च वस्त्रहिरण्यादिदक्षिणां दद्यादस-
लाभे तु दक्षिणाङ्गामलङ्कृतामाराममध्यादुदङ्मुखीम् उत्सृज्या-
चार्याय दद्याच्छेषं चतुर्थाहे फलन्तु सर्वकामावाप्तिरिति
पूर्त्तानि ॥ १० ॥

देवाश्च वा असुराश्चैषु लोकेषु स्पर्धन्त ते देवाः प्रजापतिमुप-
धावंस्तेभ्य एतां दैवीं शान्तिं प्रायच्छत्तत: स शान्तिकाश-
रामभ्यषञ्चयंस्ततो वै देवा अभवन् परासुरा अभवत्त्वात्मना पराऽस्य
द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेदाथ पूर्वाह्ण एवं प्रात-
राहुतीर्हुत्वा दर्भान् शमीन् वीरणानि दधिसर्पिःसर्षपान्
पलाशमतीमपामार्गं शाखां क्षौममित्येतान्याहृत्य दारयेद।

वोरिगादसमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वरुणाय स्वाहा अपां पतये स्वाहा पाशपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शान्तातीयं जपेत् । १४ ॥

स उदीचीं दिशमन्वावर्त्ततेऽथ यदास्य कनकरजतवस्त्रवैदूर्य्यमणिमौक्तिकवियोगो भवत्यश्मा वा विपद्यन्ते मधूनि वा निलीयन्ते काकमैथुनानि पश्येतान्यरिष्टानि वा वयांसि च गृहमध्ये वल्मीकं छत्राकं वोपजायते वायसकपोता वा वन्यविहङ्गमसृगप्रवेशो गोमृगो वा गृहनारीरिच्छुप्कारुहश्च प्ररोहेद् गृहमध्ये दूर्वाः प्ररोहन्ते तैलं स्रायेदेव श्वेतवायसो मण्डूकोऽग्निं प्रविशति सरटो मूर्ध्नि निपतति घुन्नोर्निपतति प्रज्वलन्दीपः पतति सर्पो वा द्वारे निष्क्रामतील्येवमादीनि तान्येतानि सर्वाणि वैश्रवणदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति अभित्वं देवं सवितारमोण्योरिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वैश्रवणाय स्वाहा धनाधिपतये स्वाहा हिरण्यपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शान्तातीयं जपेत् ॥ १५ ॥

स पृथिवीमन्वावर्त्ततेऽथ यदास्य पृथिवीतटानि स्फुटन्ति कम्पन्ति कूजन्त्यकस्मात् सलिलमुद्गीलयति अकाले फलपुष्पमभिवर्त्तते इत्येवमादीनि तान्येतानि सर्वाण्यग्निदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यग्निं दूतं वृणीमह इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति अग्नये स्वाहा हविष्पतये स्वाहा अर्चिःपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शान्तातीयं जपेत् । १६ ॥

सोऽन्तरिक्षमन्वावर्त्ततेऽथ यदास्य वाताविवाता वायवो

श्राविसुरादि च प्रसूयन्ते हीनाङ्गान्यधिकाङ्गानि विकृतरूपाणि जायन्त इत्येवमादीनि तान्येतानि सर्वाणि रुद्रदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इमा रुद्राय स्थिरधन्वने गिर इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति रुद्राय स्वाहा उमापतये स्वाहा त्रिशूलपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २० ॥

स सर्वा दिशोऽन्वावर्त्तेऽथ यदास्यायुक्तानि यानानि प्रवर्त्तन्ते देवतायतनानि कम्पन्ति देवताप्रतिमा हसन्ति गायन्ति नृत्यन्ति खिद्यन्ति भिद्यन्ति रुदन्त्युन्मीलयन्ति निमीलयन्ति प्रतियान्ति नद्यस्कन्धमादित्यो दृश्यते विदले च परिवेषो दृश्यते केतुकुन्तमुपानच्छत्र पञ्चदन्तमुसलानि प्रज्वलन्तीत्यश्वाना वारिभिरवरक्ता चरन्ति एतानि कर्माणि कारिकान्त इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इदं विष्णुर्विचक्रम इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति विष्णवे स्वाहा महाद्भुताधिपतये स्वाहा चक्रपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २१ ॥

अग्निकार्य्यमासमराव कुर्य्युर्यदैतच्च क्रियते पुत्रो म्रियते पौत्रो म्रियते धनमात्मानञ्च निवेशयति सुवर्णंगौर्वासो हिरण्य दक्षिणा दत्त्वा ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत नम आचार्य्येभ्यो नम आचार्य्येभ्यो नम शौनकाय नम शौनकाय ॥ २२ ॥